# ॥ श्रीधनलक्ष्मीस्तोत्रम् ॥

श्रीधनदा उवाच-
देवी देवमुपागम्य नीलकण्ठं मम प्रियम् ।
कृपया पार्वती प्राह शङ्करं करुणाकरम् ॥ १॥
श्रीदेव्युवाच-
ब्रूहि वल्लभ साधूनां दरिद्राणां कुटुम्बिनाम् ।
दरिद्र-दलनोपायमञ्जसैव धनप्रदम् ॥ २॥
श्रीशिव उवाच-
पूजयन् पार्वतीवाक्यमिदमाह महेश्वरः ।
उचितं जगदम्बासि तव भूतानुकम्पया ॥ ३॥
ससीतं सानुजं रामं साञ्जनेयं सहानुगम् ।
प्रणम्य परमानन्दं वक्ष्येऽहं स्तोत्रमुत्तमम् ॥ ४॥
धनदं श्रद्दधानानां सद्यः सुलभकारकम् ।
योगक्षेमकरं सत्यं सत्यमेव वचो मम ॥ ५॥
पठन्तः पाठयन्तोऽपि ब्राह्मणैरास्तिकोत्तमैः ।
धनलाभो भवेदाशु नाशमेति दरिद्रता ॥ ६॥
भूभवांशभवां भूत्यै भक्तिकल्पलतां शुभाम् ।
प्रार्थयेत्तां यथाकामं कामधेनुस्वरूपिणीम् ॥ ७॥
धर्मदे धनदे देवि दानशीले दयाकरे ।
त्वं प्रसीद महेशानि! यदर्थं प्रार्थयाम्यहम् ॥ ८॥
धरामरप्रिये पुण्ये धन्ये धनदपूजिते ।
सुधनं धार्मिकं देहि यजमानाय सत्वरम् ॥ ९॥ var यजनाय सुसत्वरम्
रम्ये रुद्रप्रिये रूपे रामरूपे रतिप्रिये ।
शिखीसखमनोमूर्ते प्रसीद प्रणते मयि ॥ १०॥ var शशिप्रभमनोमूर्ते
आरक्त-चरणाम्भोजे सिद्धि-सर्वार्थदायिके । var सिद्धसर्वाङ्गभूषिते
दिव्याम्बरधरे दिव्ये दिव्यमाल्योपशोभिते ॥ ११॥
समस्तगुणसम्पन्ने सर्वलक्षणलक्षिते ।
(अधिकपाठ. जातरूपमणीन्द्वादि-भूषिते भूमिभूषिते ।)
शरच्चन्द्रमुखे नीले नील-नीरज-लोचने ॥ १२॥
चञ्चरीकचमू-चारु-श्रीहार-कुटिलालके ।
मत्ते भगवति मातः कलकण्ठरवामृते ॥ १३॥ var मुखामृते
हासावलोकनैर्दिव्यैर्भक्तचिन्तापहारिके ।
रूप-लावण्य-तारूण्य-कारूण्य-गुणभाजने ॥ १४॥
क्वणत्कङ्कणमञ्जीरे लसल्लीलाकराम्बुजे ।
रुद्रप्रकाशिते तत्त्वे धर्माधारे धरालये ॥ १५॥
प्रयच्छ यजमानाय धनं धर्मैकसाधनम् ।
मातस्त्वं मेऽविलम्बेन दिशस्व जगदम्बिके ॥ १६॥ var मातर्मे मावि
कृपया करुणागारे प्रार्थितं कुरु मे शुभे ।

वसुधे वसुधारूपे वसु-वासव-वन्दिते ॥ १७॥
धनदे यजमानाय वरदे वरदा भव । var यजनायैव
ब्रह्मण्यैर्ब्राह्मणैः पूज्ये पार्वतीशिवशङ्करे ॥ १८॥ var ब्रह्मण्ये ब्राह्मणे
स्तोत्रं दरिद्रताव्याधिशमनं सुधनप्रदम् ।
श्रीकरे शङ्करे श्रीदे प्रसीद मयि किङ्करे ॥ १९॥
पार्वतीशप्रसादेन सुरेश-किङ्करेरितम् ।
श्रद्धया ये पठिष्यन्ति पाठयिष्यन्ति भक्तितः ॥ २०॥
सहस्रमयुतं लक्षं धनलाभो भवेद् ध्रुवम् ।
धनदाय नमस्तुभ्यं निधिपद्माधिपाय च ।
भवन्तु त्वत्प्रसादान्मे धन-धान्यादिसम्पदः ॥ २१॥

॥ इति श्रीधनलक्ष्मीस्तोत्रं सम्पूर्णम् ॥